# SANSKRIT PARICHAYIKA

OR

## SIMPLE LESSONS IN SANSKRIT

BY

PUNDIT CHHOTU RAM TIWAREE.




# संस्कृतपरिचायिका ।

त्रिपाठ्युपाह्वछोटूरामेण सङ्गृहीता ।



Benares:

PRINTED AT THE LIGHT PRESS, BY GOPEENAUTH PATHUK.

1865.

# SANSKRIT PARICHAYIKA

OR

## SIMPLE LESSONS IN SANSKRIT

BY

PUNDIT CHHOTU RAM TIWAREE.



# संस्कृतपरिचायिका ।

त्रिपाठ्युपाह्व छोटूरामेण सङ्गृहीता ।



Benares:

INTED AT THE LIGHT PRESS, BY GOPEENAUTH PATHUK.

1865.

# संस्कृत परिचायिका ।

---

श्रीपरमेश्वरो जयति ।

ज्ञदत्त आगम्यताम्। बहुदिनानन्तरं दृष्टोऽसि । कथं
वर्तसे। भवदीयानुग्रहेण कुशल्यस्मि। कस्येदं पुस्तकम्। मम-
भ्रातुः। तव भ्रातुः किन्नाम। सोमदत्तः। क एषः। अयं ब्रा
ह्मणः। अहो ब्राह्मणोऽसि। किमिदम्। पुस्तकमिदम्। कस्य
पुस्तकम्। वेदस्य। कस्मादागतोऽसि। गृहादागतोऽस्मि। कौ
युवाम्। ब्राह्मणावावाम्। के यूयम्। वयं वैश्याः। इमे के।
क्षत्रिया इमे। कस्त्वम्। ब्राह्मणोऽस्म्यहम्। युवां कस्मात्समा-
यातौ। गृहादावां समागतौ कस्माद् यूयं समायाताः।
स्वगेहादागता वयम्॥

---

कुत्र तव गृहम्। काश्मीरदेशे। युवयोः क्व निवासः। आ-
वयोर्नेपालदेशे स्थितिः। युष्माकं भृत्याः क्व सन्ति। अस्माकं
दासा गेहे वर्तन्ते॥

---

कोऽत्र भो। एष आगच्छामि। किमाज्ञापयति प्रभुः। मम
पिता कुत्रास्ते। अन्तःपुरे। मम पितरं पृच्छ यदहं बहिर्गन्तु
मिच्छामि। मम वासांसि समानय। इदानीमतिकालोऽभू

क गमिष्यसि। शीघ्रङ्गच्छामि अन्यथा विपणिर्मुद्रिता भवेत् अस्मिन् कस्तव परामर्शः। तत्र का चचिन्ता नास्ति। स हि विदेशं गतवान् न जाने तस्य दर्शनं भविष्यति नवा ॥

---

युवयोः कीदृशो विवादः। वृथतावधारणेन किं प्रयोजनम्। त्वं किमर्थं बिभेषि। परमेश्वरोऽस्माकं रक्षकः। स रक्षिता रक्षति यो हि गर्भे। तेन कोऽपराधः कृतः। तस्य निन्दिताचारेण तत्पितुर्दुःखमभवत्। पितरौ पुत्रार्थं बहून् क्लेशान् सहेते। यूयं सावधाना भवत। तद्वन्निन्दितं माचरत। अत्र मम कोऽपराधो यन्मां निन्दसि ॥

---

त्वं काशीं गमिष्यसि नवा। आं कतिपयदिनानन्तरं यास्यामि। वाढं! आवां मिलित्वा सहैव यास्यावः। केन मार्गेण यास्यसि जलमार्गेण स्थलमार्गेण वा। न काचिच्चिन्ता सर्वं भद्रं भविष्यति ॥

---

हे भ्रातः किं करोषि। किं पठसि। व्याकरणं पठामि। स क्व गच्छति। आगच्छ पठ। किं पठामि। मां बोधय। कृप्यनुग्रहं कुरु मह्यं देहि। एवं भवतु। इत्थं कुरु। एवं कथय। अस्यार्थं कथय। प्रत्यहमेवं कुरु। गुरो आज्ञापय। सोऽपि पठतु। अहं पूर्वं गच्छामि त्वं पश्चादागच्छ ॥

---

नमस्कारः। नमामि त्वां। कुशलन्ते। कुशलन्तावत्। तौ किं कुरुतः। त्वमत्रोपविश। इमां व्याकरणं पठतम्। इत्थं यूयं कुरुत। हीरालाल इत्थं करोतु। रामकृष्णौ कार्यं कुरुताम्। अन्ये तत्र गच्छन्तु। अहं पठानि। आवां गच्छाव। वयं गच्छाम॥

---

तस्य बहु कुटुम्बं वर्तते। उचितानि कर्माणि प्रशस्तानि भवन्ति। अनेन कार्य्येण मम को लाभो भविष्यति। तव शालायां कति बालकाः पन्ति। त्वमिमानि पुस्तकानि पेटके स्थापयित्वा स्वगृहं गच्छ। अस्य पदार्थस्य किन्नाम। केनेदं पुस्तकं रचितम्। ममास्मिन्वाक्यार्थे सन्देहो वर्तते॥

---

परमेश्वरेण विवेचनशक्तिर्मनुष्येभ्यो दत्ता न पशुभ्यः। किमर्थं सम्प्रति समागतोऽसि। मन्निकटे पुस्तकं नास्ति तत् कुत्र लप्स्ये। आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः। ये लोकाः परमेश्वरस्याज्ञां पालयन्ति ते अत्र परमं सुखं भुक्त्वा परत्रापि सुखभाजो भवन्ति॥

---

हे मित्र स पुरुषो विद्वान् सुवक्ता तेजस्वी च दृष्टः। असौ किमर्थमागतः तस्यागमनप्रयोजनं जानासि किम्। त्वङ्गत्वा जानीहि। तस्य विद्यार्थिनः कति सन्ति। तेभ्यो वृत्तिः केन दीयते। इत्यकर्तव्यं भवद्भिः। एतावन् श्रुत्वा स आसनादुत्थाय तं प्रणना-

स। यो दीनेभ्यो धनं ददाति स एव दयालुः। कृपण आत्मानम-मपि वंचयति। धीमतां कालः काव्यशास्त्रविनोदेन गच्छति परं मूर्खाणां समयो निद्रया कलहेन वाऽपयाति । तैः सर्वैरभिहितं भो युक्तमुक्तम्भवता । भवते यद्रोचते तत् क्रियताम् । एतदाकर्ण्य स प्राह भो सत्यमभिहितं त्वया ॥

---

ये केचन सामर्थ्येण शत्रुणा वैरं विधाय स्वयं निरुद्योगास्तिष्ठन्ति ते तृणसमूहे अग्निं प्रक्षिप्य अभिमारुतं शेरत इव। भृत्यैः प्रभवो न वंचनीयाः। प्रभवो दासोक्तं प्रियमप्रियं वा सोढुमर्हन्ति। यो दासः स्वामिनं हितं नोपदिशति स कुत्सितो दासः यश्च प्रभुः हितं न शृणोति स विचारशून्यः। विचारमन्तरा कार्यं न कुर्वीत । अविवेकेन कृतङ्कार्यमापदां स्थानं भवति। यो विचारपूर्वकं कार्यं करोति तं श्रियः स्वयमेव वृणते ॥

---

मनुष्यैर्विद्याधनोपार्जने इतरधनोपार्जनापेक्षयाऽधिको यत्नः कर्तव्यः । यतो वस्तुतः विद्याधनमेव सर्वोत्कृष्टं धनम् । विद्याधनं हि दानेन किंचिन्न्यूनं न भवति । चौरादयो पीदं मोषितुं न शक्नुवन्ति । विद्याहीनाः पुरुषाः रूपयौवनसम्पन्नाः सुसमृद्धा अपि सभायां तथा समादृताः न भवन्ति यथा विद्वांसः समादृता भवन्ति । अतो विद्वत्त्वं नृपत्वं च कदापि तुल्यं नास्तीति पण्डिताः कथयन्ति। परमदयालुः परमेश्वरो विद्याभ्यासद्वारा स्वबुद्धिवर्द्धनयोग्यतां केवलं मनुष्येभ्यो

ददौ न पशुभ्यः । तथाच यः कश्चिदिमां योग्यतां सफलां न करोति किन्तु पशुरिव स्वजन्मलब्धबुद्ध्या सन्तुष्टस्तिष्ठति स नररूपधरः पशुरस्ति । अपरंच पुच्छशृङ्गविहीनत्वात् पशुभ्योपिन्यूनोस्तीत्यत्र न सन्देहः ॥

---

कश्चिद् धनिकः स्वपुत्रं कस्यचिदध्यापकस्य समीपे नीत्वा प्रार्थयामास हे महाशय विद्यादानेनैतं बालकमनुगृहाण । अथसोध्यापको बरमध्यापयिष्यामीत्युक्त्वा महता श्रमेण तम्पाठयितुमारभत।परं स्वभावजडःसोर्भको विद्याभ्यासेमनो न ददौ पाठकालेपि नानाबिधं क्रीड़नकं चिन्तयन्नासीत् । एकदातस्याध्यापकस्य शालायां कश्चित् तद्देशीयः प्रधानाध्यक्ष आजगाम । स च दैवात्तमेव धनिकपुत्रं प्रथमं किञ्चित् पप्रच्छ सतु अनभ्यासादुत्तरं दातुं नाशकत। अथ कालस्याल्पत्वात् सोध्यक्षोन्यान् छात्रान् परीक्षितुं नशशाक किन्तु तस्याध्यापकस्य योग्यताविषये जातसन्देहो ययौ। अथैकदा तस्य बालकस्य पिता तदध्यापकसमीपमागत्य पप्रच्छ । हे महाशय श्रीमद्भिर्मम पुत्रोविद्यायां कुशलः कृतो न वेति । सोऽध्यापकः किञ्चिद्विहस्योत्तरमदात्। हे कल्याणिन् मयातु कथमपि स विद्वान् कर्तुं नाशक्यत किन्तु तेनैवाहं सर्वथा मूर्खः कृत इति ॥

---

लिखिलद्विषदपेक्षया विषयाभिकाङ्क्षारूपः शत्रुर्महत्तमः। अन्येशत्रवः सामदानादिना शाम्यन्तिविषयाभिकाङ्क्षातु यावदेनां

तोषयामस्तावदधिकाधिकं वर्द्धते प्रबला च भवति। अतो लोका अस्या हितं कृत्वा एनांवशीकर्तुं माचेष्टन्तां किन्तु प्रथम मेवास्या दमनं कुर्वन्तु ।

---

मिथ्यावाक् कदापि न वक्तव्या मिथ्यालापात् अस्मिन् लोके परलोके चमहती हानिर्जायते । ये हि मिथ्यावादिनो जनास्तेषु कोपि कदापि न विश्वसिति। एवं किल श्रूयते। आसीत् कश्चिन्मेषचारको बालकः स हि स्वमेषाणांचारणकाले प्रायः लोकान् परिहसितुमित्यमाक्रन्दति भो जना मम छागान् भक्षयितुमेको भयानको वृक आगच्छति तस्मात् परित्रायध्वं २। यदा च तन्निकटस्था दयालवो लोका लगुड़ान् गृहीत्वा त्वरया तत्रागच्छन्ति । तदा स तेषां परिहासं करोति।

अथैकदा अस्ताचलस्थे भगवति सवितरि संध्यारागरुषिते दिग्विभागे सत्यमेवैकः परमदारुणो विशालकायो व्याघ्रः समायातः।तदा भयविकृतस्वरो सौ बालक उच्चैःस्वरेण स्वरक्षार्थं लोकानाजुहाव। परन्तु तस्याक्रन्दितं श्रुत्वाप्युपहसितुमेवास्मानाह्वयतीति मन्यमाना लोका नाजग्मुः। अथैवं लब्धावकाशो व्याघ्रः सर्वान् मेषान् जघान। तं बालकञ्च व्यापादयत् । मरणकाले च स बालकः स्वमनसीत्थं चिन्तयामास हा कष्टं पूर्वं मयानृतमुक्तमत एव जनाः सम्प्रत्यप्ययं तथैवानृतं वदतीतिजातनिश्चया मत्साहाय्यार्थं नागच्छन्ति । मिथ्यावादिने परमेश्वरोऽपि क्रुध्यति तं दण्डयति च ॥

अन्याधिकारे कदापि न प्रवर्तितव्यम् । अन्याधिकारप्रवृत्त्या वानरः पञ्चत्वं गतः । एवं किल श्रूयते । आसीत् मगधदेशे धर्मारण्यसन्निहितवसुधायां महाबलवान् चञ्चलो नाम वानरः । स चैकदारण्ये परिभ्रमन् करपत्रविदार्य्यमाणस्य काष्ठस्तम्भस्यार्द्धपाटितस्य खण्डद्वयमध्ये निहितं कीलकं दृष्टवान् । ततोऽसौ सहजचपलतया तं कीलकं हस्ताभ्यां धृत्वा महता प्रयत्नेन आकृष्टवान् । अथाकृष्टे कीलके काष्ठखण्डद्वयाभ्यन्तरे लम्बमानं तस्याण्डद्वयं चूर्णितं जातं स च पंचत्वं गतः ॥

---

अविचारितं कर्म्म कदापि न कर्तव्यम् । एवं किल श्रूयते । आसीत् काश्यां माधवो नाम ब्राह्मणः । एकदा तस्य ब्राह्मणी पर्य्यङ्के शयानस्य स्वशिशोः रक्षार्थं तं स्थापयित्वा स्नातुं गता तस्मिन्नेवावसरे तस्मै राज्ञ आह्वानमागतम् । तदासौ विचारयामास यदि शीघ्रं न गमिष्यामि तदा नृपतिः क्रुद्धो भविष्यति । किन्तु बालकस्यात्र कश्चन रक्षको नास्ति तत् किं करोमि । भवतु चिरकालपालितमिमं नकुलं पुत्रनिर्विशेषं बालरक्षार्थे व्यवस्थाप्य गच्छामीति तथा कृत्वा गतः ॥

ततस्तत्र दैवात् कश्चित् कृष्णसर्पः समागतः अथ नकुलस्तं सर्पं बालकसमीपमागच्छन्तं दृष्ट्वा कोपात् व्यापाद्य खण्डं २ चकार । अथ किञ्चित्कालानन्तरं यदा नकुलो ब्राह्मणमायांतं ददर्श तदा सत्वरमुपागम्य तच्चरणयोर्लुलोठ ततः स विप्रो रक्तविलिप्तमुखपादं नकुलं दृष्ट्वा बालकोऽनेन खादित इत्यव-

धार्य्य नकुलं व्यापादितवान् । अनन्तरं गृहं प्रविश्य स्वसुतं स्वस्थं सर्पं च व्यापादितं दृष्ट्वा अहो अत्युपकारको जन्तुर्मया मन्दबुद्धिनाविचार्य्य हत इति परमं विषादमाप ॥

---

अतितृष्णा न कर्तव्या। तथाहि । कस्याश्चित् स्त्रिया एका हंसी आसीत्। सा वरटा प्रत्यहमेकं रजताण्डं जनयामास । अथैकदा सा स्त्री लोभादेवमचिन्तयत् यदि वरटाया आहारं वर्द्धयेयं तदा एषा प्रतिदिनमण्डद्वयं जनयिष्यते । ततः सा तामधिकं भोजयितुं प्रारभत तेन प्रचुराशनेनैव वर्द्धितकुक्षिर्वरटैकमप्यण्डं न प्रासोष्ट ॥

---

नीचाय श्लाघ्यपदं कदापि न देयम् । यतो नीचः श्रेष्ठाधिकारं प्राप्य स्वोपकारिणामप्यकारं करोति। यथा आसीद् गौतमस्य महर्षेस्तपोवने महातपा नाम मुनिः । तत्रैकदा कश्चित् काको मूषिकशावकं निनाय। ततः स्वभावदयालुरसौ मुनिस्तं शावकं काकान्मोचयित्वा पालयामास । अथैकदा तत्राश्रमे कश्चिन्मार्जार आजगाम तस्माद्भीतो मूषिकस्तस्य मुनेरङ्कम्प्रविवेश । ततो मुनिनोक्तं मूषिक मार्जारान्माभैषीः त्वमपि मार्जारो भव। ततः कश्चित् कुक्कुरस्तत्र समायातः तं दृष्ट्वा मार्जाररूपो मूषिकः पलायते। तदा मुनिना पुनरुक्तं कुक्कुराद्बिभेषि त्वमेव कुक्कुरो भव । ततस्स कुक्करो भूत्वापि स व्याघ्रं दृष्ट्वा भयान्मुनेः सकाशमागच्छदिति मुनिस्तमपि व्याघ्रं चकार ।

अथ तं मुनिं दृष्ट्वा सर्वे कथयन्ति अनेन मुनिना मूषिको व्याघ्रतां नीत इति। एतच्छ्रुत्वा स व्याघ्रोऽचिन्तयत् यावदनेन मुनिना स्थातव्यं तावदिदं मे स्वरूपाख्यानमकीर्तिकरं नापयास्यति। इत्यालोच्यासौ दुष्टस्तं मुनिं हन्तुमुद्यतः। ततो मुनिना तज्ज्ञात्वा पुनर्मूषिको भव इत्युक्त्वा पुनर्मूषिकः कृतः॥

---

अस्ति काशी नाम नगरी तस्यां सर्वगुणसम्पन्नः ब्राह्मणपुत्रः सुरूपो नामासीत्। सोऽष्टादशवर्षदेशीयश्चिन्तामापेदे। नास्ति पत्नीरहितानां निर्गुणपत्नीकानां वा सुखं नाम। तत् कथन्नु लभेयं गुणविशिष्टं कलत्रमिति। अथासौ गणक इत्यात्मानं प्रख्याप्य प्रस्थपरिमितं शालिं गृहीत्वा भुवं बभ्राम। लक्षणज्ञोऽयमित्यस्मै कन्यावन्तः कन्याः प्रदर्शयामासुः। यां कांचित् सुरूपां सवर्णां कन्यां दृष्ट्वा स किल ब्रवीति स्म भद्रे शक्नोषि। किमनेन धान्यप्रस्थेन स्वादु व्यञ्जनं मां भोजयितुमिति। ततश्च स परिहसितावधूतो गृहाद्गृहान्तरं व्रजन् वभ्राम। एकदा तु कस्मिंश्चिद् ग्रामे धात्र्या प्रदर्श्यमानां कांचन विरलभूषणां कुमारीं ददर्श। अस्याः खलु कन्यायाः सर्वे एवावयवा मनोहराः आसज्जति च मे हृदयमस्यां परीक्ष्यैनामेवोद्वहेयमिति विचार्य्य जगाद भद्रे कच्चिदस्ति त्वयि कौशलं शालिप्रस्थेनान्नेन सम्पन्नमाहारं मां भोजयितुमिति। ततस्तया कन्यया वृद्धदासी साकूतमालोकिता। अथ सा दासी तस्य हस्तात्प्रस्थमात्रधान्यमादाय तंचोत्तमगृहे दत्तपाद-

शौचमुपावेशयत्। अथ सा कन्या तान् शालीन् विशोष्यातपे तुषैरखण्डैस्तण्डुलान् पृथक् चकार जगाद च धात्रीं मातरिमान् भूषणमृजाक्रियाचमान् तुषान् स्वर्णकाराय दत्वा तस्मालब्धाभिः काकिणीभि रनत्यार्द्राणि नाति शुष्काणि काष्ठानि मितम्पचां स्थालीमुभेशरावे चाहरेति। तथा कृते तया सा तांस्तण्डुलान् उलूखले मुसलेनावहत्योद्धृत्य शूर्पेण किंशारुकादीन संशोध्य जले प्रक्षाल्य क्वथितपंचगुणे जले प्राक्षिपत्। ततः प्रश्लयावयवेषु प्रस्फुरत्सु तण्डुलेषु सङ्क्षिप्यान समुपहितमुखपिधानया स्थाल्यान्नमण्डमगालयत्। दर्व्याचावगाह्य सन्दंशन्या गृहीत्वा तां स्थालीं चुल्ली पार्श्वे प्रतिष्ठिपत्। इन्धनान्यन्तस्साराण्यम्भसा समभ्युक्ष्याङ्गारीकृत्य तदर्थिभ्यः प्राहिणोत्। एभिर्लब्धाः काकिणीर्दत्वा शाकं घृतं दधि तैलमामलकंच यथालाभमानयेति धात्रीं जगाद। तथातयानुष्ठिते तन्मण्डमार्द्रबालुकोपनिहितनवशरावगतं मृदुना तालवृन्तेन शीतलीकृत्य सलवणसंभारंदत्त्वाङ्गारधूपवासं च सम्पाद्य धात्रीमुखेन तं भोजनायाचोदयत्। ततोऽसौफलकमारुह्यातिष्ठत्। सा तुतत्पेयमेवाग्रे समुपाहरत्। पीत्वा चापनीताध्वश्रमः प्रहृष्टः स्थितोभूत्। ततस्तस्यशाल्योदनस्य सकलव्यञ्जनेन सह कतिपयदर्वीर्दत्वाभोजयत् भुक्त्वाचायमतृप्यत्। अयाचत च पानीयम्। अथ सा सुशीतलं वारि ददौ। सोपितत पानीयमाकण्ठं पपौ परितुष्टस्तानेन तस्याः कौशलेन तां विधिवद्विवाह्य स्वगृहं निन्ये। तद्गुणवशीकृतस्तस्यायंस्त्रीयं सर्वस्वं

दधीनं कृत्वा ससुखं यावज्जीवमुवास ॥

---

मनुष्याणां सर्वेभ्यो धनेभ्यः काल एव श्रेष्ठतरं धनम् । यत तस्तेन सर्वविधान्यभिलषितवस्तूनि सम्पादयितुं शक्यन्ते परन्तु महतापि धनव्ययेन जीवितकालस्याल्पतमोप्यंशः लब्धुं नशक्यते श्रूयते किल यत्सकलभूमण्डललामभूतस्य ब्रीटनाभिधस्य देशस्य महाराज्ञी एलिजेवथनाम्नी स्वमरणकालात् किञ्चित् पर्वमित्थं घोषयामास । यः कश्चित् भिषक् मामर्द्धदण्ड-मात्रमपि जीवयिष्यति तस्मै कोटिमुद्राः पारितोषिकं दास्या-मीति । परं सैतादृशाधिकेनापि मौल्येनार्द्धदण्डमात्रमपि कालं क्रेतुं नाशक्नोत् किन्तु तत्क्षणएव ममार । अतः पुरुषैः कालस्य व्यर्थव्ययो न कर्तव्यः ।

अशनादिष्वावश्यककृत्येष्वपि समयस्य तावानेव भागोनि-योक्तव्यो यावांस्तात्यन्तावश्यको भवेत् । यथा शयनाय पञ्चदश घटिकापरिमितः कालः सर्वथालमित्यनुभवसिद्धो विषयः । यथा हि धनिकाःस्वसुवर्णस्य रक्षणे सावधानास्तिष्ठन्ति तथैव मनुष्यैः सदा सन्निहितेभ्यः कालापहारकेभ्य आलस्यादिभ्यः समयरक्षणे सावधानैर्भवितव्यम् ॥

---

## सङ्गृहीतश्लोकाः ।

योयमर्थं प्रार्थयते यमर्थं घटते चयः । अवश्यं तदवाप्नोति नचेच्छ्रान्तो निवर्तते ॥ १ ॥

ब्राह्मे मुहूर्त्ते पुरुषस्त्यजेन्निद्रामतन्द्रितः। नरं प्रातःप्रबुद्धं हि श्रयति श्रीर्गुणाश्रया ॥ २ ॥

कर्म्मणा मनसा वाचा चक्षुषा च चतुर्विधम् । प्रसादयति लोकं यस्तं लोकोऽनुप्रसीदति ॥ ३ ॥

इदमेव हि पाण्डित्यमियमेव विदग्धता। अयमेव परो धर्मो यदायान्नाधिको व्ययः ॥ ४ ॥

मृदोः परिभवो नित्यं वैरं तीक्ष्णस्य जाग्रतः। उत्सृज्य तद्वयं तस्मान्मध्यां वृत्तिं समाश्रयेत् ॥ ५ ॥

अभ्युन्नतपदारूढः पूज्यान्नैवापमानयेत् । नहुषः शक्रतां प्राप्य च्युतोऽगस्त्यापमानतः ॥ ६ ॥

किं कुलेन विशालेन शीलमेवात्रकारणम् । कृमयः किन्न जायन्ते कुसुमेषु सुगन्धिषु ॥ ७ ॥

मूर्खोहि जल्पतां पुंसां श्रुत्वावाचः शुभाशुभाः । अशुभं वाक्य मादत्ते पुरीषमिवशूकरः ॥ ८ ॥

प्राज्ञस्तुजल्पतां पुंसां श्रुत्वावाचः शुभाशुभः । गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥ ९ ॥

परदारान् परद्रव्यं परिवादम्परस्यच । परिहासंगुरोः स्थाने चापल्यञ्च विवर्जयेत् ॥ १० ॥

न द्विषन्ति न याचन्ते परनिन्दां न कुर्वते । अनाहूता न चायान्ति श्रेष्ठास्ते मानवाः स्मृताः ॥ ११ ॥

अद्वृत्तिकं त्यजेद्देशं वृत्तिं सोपद्रवां त्यजेत् । त्यजेन्मायावि मित्रञ्च धनं प्राणहरं त्यजेत् ॥ १२ ॥

किं तेन जातु जातेन मातुर्य्यौवनहारिणा । आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥ १३ ॥

विपदि धैर्य्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः । यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ १४ ॥

ते वै सत्पुरुषाः परार्थघटकाः स्वार्थस्य बाधेन ये मध्यस्थाः परकीयकार्यकुशलाः स्वार्थाविरोधेन ये । तेऽमी मानुषराक्षसाः परहितं यैः स्वार्थतो हन्यते ये तद्घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ १५ ॥

नन्दन्तु नीतिनिपुणाः यदि वा स्तुवन्तु लक्ष्मी समाविशतु गच्छतु वा यथेष्टम् । अद्यैव वा मरणमस्तु युगान्तरे वा न्याय्यात पथः प्रविचलन्ति पदन्न धीराः ॥ १६ ॥

जाड्यन्धियो हरति सिञ्चति वाचि सत्यं मानोन्नतिं दिशति पापमपाकरोति । चेतः प्रसादयति दिक्षु तनोति कीर्तिं सत्सङ्गतिः कथय किन्न करोति पुंसाम् ॥ १७ ॥

मन्निन्दया यदि जनः परितोषमेति नन्वप्रयत्नसुलभोयमनुग्रहोमे । श्रेयोर्थिनो हि पुरुषाः परतुष्टिहेतोर्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ १८ ॥

कोहं कौ देशकालौ समविषमगुणाः कोरयः के सहायाः का शक्तिः कोभ्युपायः फलमिह च कियत् कीदृशी दैवसम्पत्। सम्पत्तौ को निबन्धः प्रविदित वचनस्योत्तरं किञ्च सेव्या दित्येवं कार्यसिद्धाववहितमनसः सम्पदो हस्तसंस्थाः ॥ १८ ॥

संपूर्णम् ॥








बनारस लाइट् यन्त्रालय में मुद्रित हुई ॥

